चौखम्बा स्तोत्र ग्रन्थमाला

८

# ॥ सरस्वतीसहस्रनामस्तोत्रम् ॥

## (नामावलीसहितम्)

चौखम्बा संस्कृत प्रतिष्ठान : दिल्ली

मूल्य १०.००

॥ श्रीरस्तु ॥

# ॥ सरस्वतीसहस्रनामस्तोत्रम् ॥

## ( नामावलीसंवलितम् )

चौखम्बा संस्कृत प्रतिष्ठान

३८ यू. ए., बंगलो रोड, जवाहरनगर

दिल्ली ११०००७

श्रीरस्तु

# ॥ सरस्वतीसहस्रनामस्तोत्रम् ॥

## ध्यानम्

श्रीमच्चन्दनचर्चितोज्ज्वलवपु श्शुक्लाम्बरा मल्लिका-
मालालालित कुन्तला प्रविलसन्मुक्तावलीशोभना ।
सर्वज्ञाननिधानपुस्तकधरा रुद्राक्षमालाङ्किता
वाग्देवी वदनाम्बुजे वसतु मे त्रैलोक्यमाता शुभा ॥

श्रीनारदउवाच—

भगवन्परमेशान सर्वलोकैकनायक ।

कथं सरस्वती साक्षात्प्रसन्ना परमेष्ठिनः ॥ १

कथं देव्या महावाण्याः सतत्प्राप सुदुर्लभम् ।
एतन्मे वद तत्त्वेन महायोगीश्वरप्रभो ॥ ३

सनत्कुमारः—

साधु पृष्टं त्वया ब्रह्मन् गुह्याद्गुह्य मनुत्तमम् ।
भयानुगोपितं यत्नादिदानीं स(त)त्प्रकाश्यते ॥ ४

पुरा पितामहं दृष्ट्वा जगत्स्थावरजंगमम् ।
निर्विकारं निराभासं स्तंभीभूतमचेतसम् ॥ ५

सृष्ट्वा त्रैलोक्यमखिलं वागभावात्तथाविधम् ।
आधिक्याभावतस्तस्य परमेष्ठी जगद्गुरुः ॥ ६

दिव्यवर्षायुतं तेन तपो दुष्कर मुत्तमम् ।
ततः कदाचित्संजाता वाणी सर्वार्थशोभिता ॥ ७

अहमस्मि महाविद्या सर्ववाचामधीश्वरी ।
मम नाम्नां सहस्रं तु उपदेक्ष्याम्यनुत्तमम् ॥ ८

अनेन संस्तुता नित्यं पत्नी तव भवाम्यहम् ।
त्वया सृष्टं जगत्सर्वं वाणीयुक्तं भविष्यति ॥ ९

इदं रहस्यं परमं मम नामसहस्रकम् ।
सर्वपापौघशमनं महासारस्वतप्रदम् ॥ १०

महाकवित्वदं लोके वागीशत्वप्रदायकम् ।

वरं वा परः पुमान्यस्तु स्तवेनानेन तोषयेत् ॥ ११

तस्याहं किंकरी साक्षाद्भविष्यामि न संशयः ।
इत्युक्त्वान्तर्दधे वाणी तदारभ्य पितामहः ॥ १२
स्तुत्वा स्तोत्रेण दिव्येन तत्पतित्वमवाप्तवान् ।
वाणीयुक्तं जगत्सर्वं तदारभ्याभवन्मुने ॥ १३
तत्तेहं संप्रवक्ष्यामि शृणु यत्नेन नारद ।
सावधानमना भूत्वा क्षणं शुद्धो मुनीश्वरः ॥ १४

मन्त्रः—

ऐं वद वद वाग्वादिनी स्वाहा ॥

वाग्वाणी वरदा वंद्या वरारोहा वरप्रदा ।

वृत्तिर्वागीश्वरी वार्ता वरा वागीशवल्लभा ॥ १
विश्वेश्वरी विश्ववंद्या विश्वेशप्रियकारिणी ।
वाग्वादिनी च वाग्देवी वृद्धिदा वृद्धिकारिणी ॥ २
वृद्धिर्वृद्धा विषघ्नी च वृष्टिर्वृष्टिप्रदायिनी ।
विश्वाराध्या विश्वमाता विश्वधात्री विनायका ॥ ३
विश्वशक्तिर्विश्वपारा विश्वा विश्वविभावरी ।
वेदांतवेदिनी वेद्या वित्ता वेदत्रयात्मिका ॥ ४
वेदज्ञा वेदजननी विश्वा विश्वविभावरी ।
वरेण्या वाङ्मयी वृद्धा विशिष्टप्रियकारिणी ॥ ५
विश्वतो वदना व्याप्ता व्यापिनी व्यापकात्मिका ।

व्याळघ्नी व्याळभूषांगी विरजा वेदनायिका ॥ ६
वेदवेदांतसंवेद्या वेदांतज्ञानरूपिणी ।
विभावरी च विक्रांता विश्वामित्रा विधिप्रिया ॥ ७
वरिष्ठा विप्रकृष्टा च विप्रवर्यप्रपूजिता ।
वेदरूपा वेदमयी वेदमूर्तिश्च वल्लभा ॥ ८

मन्त्रः—

ओं ह्रीं गुरुरूपे मां गृह्ण ऐं वद वद वाग्वादिनीस्वाहा ॥

गौरी गुणवती गोप्या गंधर्वनगरप्रिया ।
गुणमाता गुहांतस्था गुरुरूपा गुरुप्रिया ॥ ९

गिरिविद्या गानतुष्टा गायकप्रियकारिणी ।
गायत्री गिरिशाराध्या गीर्गिरीशप्रियंकरी ॥ १०
गिरिज्ञा ज्ञानविद्या च गिरिरूपा गिरीश्वरी ।
गीर्माता गणसंस्तुत्या गणनीयगुणान्विता ॥ ११
गूढरूपा गुहागोप्या गोरूपा गौर्गुणात्मिका ।
गुर्वी गुर्वंबिका गुह्या गेयजा गृहनाशिनी ॥ १२
गृहिणी गृहदोषघ्नी नवघ्नी गुरुवत्सला ।
गृहात्मिका गृहाराध्या गृहबाधाविनाशिनी ॥ १३
गंगा गिरिसुता गम्या गजयाना गुहस्तुता ।
गरुडासनसंसेव्या गोमती गुणशालिनी ॥ १४

मन्त्रः—

ओं ऐं नमः शारदे श्रीं शुद्धे नमः शारदे ऐं वद वद
वाग्वादिनी स्वाहा ॥

शारदा शाश्वती शैवी शांकरी शंकरात्मिका ।
श्रीश्शर्वाणी शतघ्नी च शरच्चंद्रनिभानना ॥ १५
शर्मिष्ठा शमनघ्नी च शतसाहस्ररूपिणी ।
शिवा शंभुप्रिया श्रद्धा श्रुतिरूपा श्रुतिप्रिया ॥ १६
शुचिष्मती शर्मकरी शुद्धिदा शुद्धिरूपिणी ।
शिवा शिवंकरी शुद्धा शिवाराध्या शिवात्मिका ॥ १७

श्रीमती श्रीमयी श्राव्या श्रुतिश्रवणगोचरा ।
शांतिश्शांतिकरी शान्ता शांताचारप्रियंकरी ॥ १८

शीललभ्या शीलवती श्रीमाता शुभकारिणी ।
शुभवाणी शुद्धविद्या शुद्धचित्तप्रपूजिता ॥ १९

श्रीकरी श्रुतपापघ्नी शुभाक्षी शुचिवल्लभा ।
शिवेतरघ्नी शबरी श्रवणीयगुणान्विता ॥ २०

शारी शिरीषपुष्पाभा शमनिष्ठा शमात्मिका ।
शमान्विता शमाराध्या शितिकंठप्रपूजिता ॥ २१

शुद्धिः शुद्धिकरी श्रेष्ठा श्रुतानंता शुभावहा ।
सरस्वती च सर्वज्ञा सर्वसिद्धिप्रदायिनी ॥ २२

मन्त्रः—

ओं ऐं वद वद वाग्वादिनी स्वाहा ॥

सरस्वती च सावित्री संध्या सर्वेप्सितप्रदा ।
सर्वार्तिघ्नी सर्वमयी सर्वविद्याप्रदायिनी ॥ २३

सर्वेश्वरी सर्वपुण्या सर्गस्थित्यंतकारिणी ।
सर्वाराध्या सर्वमाता सर्वदेवनिषेविता ॥ २४

सर्वैश्वर्यप्रदा सत्या सती सत्वगुणाश्रया ।
स्वरक्रमपदाकारा सर्वदोषनिषूदिनी ॥ २५

सहस्राक्षी सहस्रास्या सहस्रपदसंयुता ।

सहस्रहस्ता साहस्रगुणालङ्कृतविग्रहा ॥ २६

सहस्रशीर्षसद्रूपा स्वधा स्वाहा सुधामयी ।
षड्ग्रंथिभेदिनी सेव्या सर्वलोकैकपूजिता ॥ २७

स्तुत्या स्तुतिमयी साध्या सवितृप्रियकारिणी ।
संशयच्छेदिनी सांख्यवेद्या संख्या सदीश्वरी ॥ २८

सिद्धिदा सिद्धसंपूज्या सर्वसिद्धिप्रदायिनी ।
सर्वज्ञा सर्वशक्तिश्च सर्वसंपत्प्रदायिनी ॥ २९

सर्वाऽशुभघ्नी सुखदा सुखा संवित्स्वरूपिणी ।
सर्वसंभीषणी सर्वजगत्सम्मोहिनी तथा ॥ ३०



सर्वप्रियंकरी सर्वशुभदा सर्वमंगळा ।

सर्वमंत्रमयी सर्वतीर्थपुण्यफलप्रदा ॥ ३१
सर्वपुण्यमयी सर्वव्याधिघ्नी सर्वकामदा ।
सर्वविघ्नहरी सर्ववंदिता सर्वमंगळा ॥ ३२
सर्वमंत्रकरी सर्वलक्ष्मीस्सर्वगुणान्विता ।
सर्वानंदमयी सर्वज्ञानदा सत्यनायिका ॥ ३३
सर्वज्ञानमयी सर्वराज्यदा सर्वमुक्तिदा ।
सुप्रभा सर्वदा सर्वा सर्वलोकवशंकरी ॥ ३४
सुभगा सुंदरी सिद्धा सिद्धांबा सिद्धमातृका ।
सिद्धमाता सिद्धविद्या सिद्धेशी सिद्धरूपिणी ॥ ३५

सुरूपिणी सुखमयी सेवकप्रियकारिणी ।
स्वामिनी सर्वदा सेव्या स्थूलसूक्ष्मापराम्बिका ॥ २९

साररूपा सरोरूपा सत्यभूता समाश्रया ।
सिताऽसिता सरोजाक्षी सरोजासनवल्लभा ॥ ३७

सरोरुहाभा सर्वांगी सुरेंद्रादिप्रपूजिता ।

मन्त्रः—
ओं ह्रीं ऐं महासरस्वति ।सरस्वतप्रेद ऐं वद वद वाग्वादिनी स्वाहा ॥

महादेवी महेशानी महासारस्वतप्रदा ॥ ३८

महासरस्वती मुक्ता मुक्तिदा मलनाशिनी ।
महेश्वरी महानंदा महामंत्रमयी मही ॥ ३९

महालक्ष्मीर्महाविद्या माता मंदरवासिनी ।
मंत्रगम्या मंत्रमाता महामंत्रफलप्रदा ॥ ४०

महामुक्ति र्महानित्या महासिद्धिप्रदायिनी ।
महासिद्धा महामाता महदाकारसंयुता ॥ ४१

महामहेश्वरी मूर्तिः मोक्षदा मणिभूषणा ।
मेनकामानिनी मान्या मृत्युघ्नी मेरुरूपिणी ॥ ४२

मदिराक्षी मदावासा मखरूपा मखेश्वरी ।
महामोहा महामाया मातृणां मूर्ध्नि संस्थिता ॥ ४३

महापुण्या मुदावासा महासंपत्प्रदायिनी ।

मणिपूरैकनिलया मधुरूपा महोत्कटा ॥ ४४

महासूक्ष्मा महाशांता महाशांतिप्रदायिनी ।
मुनिस्तुता मोहहंत्री माधवी माधवप्रिया ॥ ४५

मा महादेवसंस्तुत्यमहिषीगणपूजिता ।
मृष्टान्नदा च माहेंद्री महेन्द्रपददायिनी ॥ ४६

मतिर्मतिप्रदा मेधा मर्त्यलोकनिवासिनी ।
मुख्या महानिवासा च महाभाग्यजनाश्रिता ॥ ४७

महिळा महिमा मृत्युहारी मेधाप्रदायिनी ।
मेध्या महावेगवती महामोक्षफलप्रदा ॥ ४८

महाप्रभा मा महती महादेवप्रियंकरी ।

महापोषा महर्द्धिश्च मुक्ताहाराविभूषणा ॥ ४९

माणिक्यभूषणा मन्त्रा मुख्यचंद्रार्धशेखरा ।
मनोरूपा मनश्शुद्धिः मनश्शुद्धिप्रदायिनी ॥ ५०

महाकारुण्यसंपूर्णा मनोनमनवंदिता ।
महापातकजालघ्नी मुक्तिदा मुक्तभूषणा ॥ ५१

मनोन्मनी महास्थूला महाक्रतुफलप्रदा ।
महापुण्यफलप्राप्या मायात्रिपुरनाशिनी ॥ ५२

महानसा महामेधा महामोदा महेश्वरी ।
मालाधरी महोपाया महातीर्थफलप्रदा ॥ ५३

महामंगळसंपूर्णा महादारिद्र्यनाशिनी ।

महामखा महोमघा महाकाळी महाप्रिया ॥ ५४
महाभूषा महादेहा महाराज्ञी मुदालया ।
मन्त्रः—
ओं ह्रीं ऐं नमोभगवति ऐं वद वद वाग्वादिनी स्वाहा ॥ ५५
भूरिदा भाग्यदा भोग्या भोग्यदा भोगदायिनी ।
भवानी भूतिदा भूतिः भूमिर्भूमिसुनायिका ॥ ५६
भूतधात्री भयहरी भक्तसारस्वतप्रदा ।
मुक्तिर्मुक्तिप्रदा भेकी भक्तिर्भक्तिप्रदायिनी ॥ ५७
भक्तसायुज्यदा भक्तस्वर्गदा भक्तराज्यदा ।
भागीरथी भवाराध्या भाग्या सज्जनपूजिता ॥ ५८

भवस्तुत्या भानुमती भवसागरतारणी ।

भूतिर्भूषा च भूतेशी फाललोचनपूजिता ॥ ५९
भूता भव्या भविष्या च भवविद्या भवात्मिका ।
बाधापहारिणी बन्धुरूपा भुवनपूजिता ॥ ६०
भवघ्नी भक्तिलभ्या च भक्तरक्षणतत्परा ।
भक्तार्तिशमनी भाग्या भोगदानकृतोद्यमा ॥ ६१
भुजङ्गभूषणा भीमा भीमाक्षी भीमरूपिणी ।
भाविनी भ्रातृरूपा च भारती भवनायिका ॥ ६२
भाषा भाषावती भीष्मा भैरवी भैरवप्रिया ।
भूतिर्भासितसर्वाङ्गी भूतिदा भूतिनायिका ॥ ६३

भास्वती भगमाला च भिक्षा दानकृतोद्यमा ।
भिक्षुरूपा भक्तिकरी भक्तलक्ष्मीप्रदायिनी ॥ ६४

भ्रान्तिघ्ना भ्रान्तिरूपा च भूतिदा भूतिकारिणी ।
भिक्षणीया भिक्षुमाता भाग्यवद्दृष्टिगोचरा ॥ ६५

भोगवती भोगरूपा भोगमोक्षफलप्रदा ।
भोगश्रान्ता भाग्यवती भक्ताघौघविनाशिनी ॥ ६६

मन्त्रः—

ओं ऐं क्लीं सौः बाले ब्राह्मीब्रह्मपत्नी ऐं वद वद
वाग्वादिनी स्वाहा ॥ ६७

ब्राह्मी ब्रह्मस्वरूपा च बृहती ब्रह्मवल्लभा ।

ब्रह्मदा ब्रह्ममाता च ब्रह्माणी ब्रह्मदायिनी ॥ ६८

ब्रह्मेशी ब्रह्मसंस्तुत्या ब्रह्मवेद्या बुधप्रिया ।
बालेन्दुशेखरा बाला बलिपूजाकरप्रिया ॥ ६९

बलदा बिन्दुरूपा च बालसूर्यसमप्रभा ।
ब्रह्मरूपा ब्रह्ममयी ब्रह्ममण्डलमध्यगा ॥ ७०

ब्रह्माणी बुद्धिदा बुद्धिर्बुद्धिरूपा बुधेश्वरी ।
बन्धक्षयकरी बाधानाशनी बन्धुरूपिणी ॥ ७१

बिन्द्वालया बिन्दुभूषा बिन्दुनादसमन्विता ।
बीजरूपा बीजमाता ब्रह्मण्या ब्रह्मकारिणी ॥ ७२

बहुरूपा बलवती ब्रह्मजा ब्रह्मचारिणी ।

ब्रह्मस्तुत्या ब्रह्मविद्या ब्रह्माण्डाधिपवल्लभा ॥ ७३
ब्रह्मेशविष्णुरूपा च ब्रह्मविष्ण्वेशसंस्थिता ।
बुद्धिरूपा बुधेशानी वन्धी वन्धविमोचनी ॥ ७४

मन्त्रः—

ओं ह्रीं ऐं अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं ळं क्षं अक्षमाले अक्षरमालिका समलंकृते वद वद वाग्वादिनीस्वाहा ॥

अक्षमालाक्षराकारा क्षराक्षरफलप्रदा ।
अनन्तानन्दसुखदाऽनन्तचन्द्रनिभानना ॥ ७५

अनन्तमहिमाघोरानन्तगंभीरसम्मिता ।

अदृष्टादृष्टिदानन्ता दृष्टभाग्यफलप्रदा ॥ ७६
अरुंधत्यन्वयीनाथानेकसद्गुणसंयुता ।
अनेकभूषणादृश्यानेकलेखनिषेविता ॥ ७७
अनन्तानन्तसुखदा घोरा घोरस्वरूपिणी ।
अशेषदेवतारूपा मृतरूपा मृतेश्वरी ॥ ७८
अनवद्यानेकहस्तानेकमाणिक्यभूषणा ।
अनेकविघ्नसंहर्त्री ह्यनेकाभरणान्विता ॥ ७९
अविद्याज्ञानसंहर्त्री ह्यविद्याजालनाशिनी ।
अभिरूपानवद्याङ्गी ह्यप्रतर्क्यगतिप्रदा ॥ ८०

अकळंका रूपिणी च ह्यनुग्रहपरायणा ।
अंबरस्थांबरमयांबरमालांबुजेक्षणा ॥ ८१
अंबिकाब्जकराब्जस्थांशुमत्यंशुशतान्विता ।
अंबुजानवराखण्डाम्बुजासनमहाप्रिया ॥ ८२
अंजरामरसंसेव्या जरसेवितपद्युगा ।
अतुलार्थप्रदार्थैक्यात्युदारात्वभयान्विता ॥ ८३
अनाथवत्सलानन्तप्रियानन्तेप्सितप्रदा ।
अंबुजाक्ष्यंबुरूपांबुजातोद्भवमहाप्रिया ॥ ८४
अखण्डात्वमरस्तुत्यामरनायकपूजिता ।
अजेयात्वजसंकाशाऽज्ञाननाशिन्यभीष्टदा ॥ ८५

अक्ता घनेन चाखेशीह्यलक्ष्मीनाशिनी तथा ।

अनन्तसारानन्तश्रीरनन्तविधिपूजिता ॥ ८६
अभीष्टा मर्त्यसम्पूज्या ह्यस्तोदय विवर्जिता ।
आस्तिकस्वान्तनिलयास्वरूपास्त्रवती तथा ॥ ८७
अस्खलत्यस्खलद्रूपा स्खलद्विद्याप्रदायिनी ।
अस्खलत्सिद्धिदानन्दांबुजाभरनायिका ॥ ८८
अमेयाशेषपापघ्न्यक्षयसारस्वतप्रदा ॥

मन्त्रः—

ओं ज्यां ह्रीं जयजय जगन्मातः ऐं वद वद वाग्वादिनी स्वाहा
जया जयन्ती जयदा जन्मकर्मविवर्जिता ॥ ८९

जगत्प्रिया जगन्माता जगदीश्वरवल्लभा ।
जातिर्जयाजितामित्रा जप्या जपनकारिणी ॥ १०
जीवनी जीवनिलया जीवाख्या जीवधारिणी ।
जाह्नवीज्या जपवती जातिरूपा जयप्रदा ॥ ११
जनार्दनप्रियकरी जोषनीया जगत्स्थिता ।
जगज्ज्येष्ठा जगन्माया जीवनत्राणकारिणी ॥ १२
जीवातुलतिका जीवा जन्मीजन्मनिवर्हणी ।
जाड्यविध्वंसनकरी जगद्योनिर्जयात्मिका ॥ १३
जगदानन्दजननी जंबूश्च जलजेक्षणा ।
जयन्ती जह्नुपुमघी जनितज्ञानविग्रहा ॥ १४

जटा जटावती जप्या जपकर्तृप्रियङ्करी ।

जपकृत्पापसंहर्त्री जपकृत्फलदायिनी ॥ १५

जपापुष्पसमप्रख्या जपाकुसुमधारिणी ।
जननी जन्मरहिता ज्योतिर्वृत्यभिदायिनी ॥ १६

जटाजूटनचन्द्रार्धा जगत्सृष्टिकरी तथा ।
जगत्त्राणकरी जाड्यध्वंसकर्त्री जयेश्वरी ॥ १७

जगद्बीजा जयावासा जन्मभूर्जन्मनाशिनी ।
जन्मान्त्यरहिता जैत्री जगद्योनिर्जपात्मिका ॥ १८

जयलक्षणसंपूर्णा जयदानकृतोद्यमा ।
जम्भराद्यादिसंस्तुत्या जम्भारिफलदायिनी ॥ १९

जगत्त्रयहिता ज्येष्ठा जगत्त्रयवशङ्करी ।
जगत्त्रयाम्बा जगती ज्वालाज्वालितलोचना ॥ १००

ज्वालिनी ज्वलनाभासा ज्वलती ज्वलनात्मिका ।
जितारातिसुरस्तुत्या जितक्रोधा जितेन्द्रिया ॥ १०१

जरामरणशून्या च जनित्री जन्मनाशिनी ।
जलजाभा जलमयी जलजासनवल्लभा ॥ १०२

जलजस्था जपाराध्या जनमङ्गळकारिणी ॥
ऐं क्लीं सौः कल्याणी कामधारिणी वद वद वाग्वादिनी स्वाहा
कामिनी कामरूपा च काम्या कामप्रदायिनी ॥ १०३


कमौळी कामदा कर्त्री क्रतुकर्मफलप्रदा ।

कृतघ्नघ्नी क्रयारूपा कार्यकारणरूपिणी ॥ १०४

कञ्जाक्षी करुणारूपा केवलामरसेविता ।
कल्याणकारिणी कान्ता कान्तिदा कान्तिरूपिणी ॥ १०५

कमला कमलावासा कमलोत्पलमालिनी ।
कुमुद्वती च कल्याणी कान्ता कामेशवल्लभा ॥ १०६

कामेश्वरी कमलिनी कामदा कामबन्धिनी ।
कामधेनुः काञ्चनाक्षी काञ्चनाभा कळानिधिः ॥ १०७

क्रिया कीर्तिकरी कीर्तिः क्रतुश्रेष्ठा कृतेश्वरी ।
क्रतुसर्वक्रियास्तुत्या क्रतुकृत्प्रियकारिणी ॥ १०८

क्लेशनाशकरी कर्त्री कर्मदा कर्मबन्धिनी ।
कर्मबन्धहरी कृष्टा क्लमघ्नी कञ्जलोचना ॥ १०९

कन्दर्पजननी कान्ता करुणा करुणावती ।
क्लींकारिणी कृपाकारा कृपासिन्धुः कृपावती ॥ ११०

करुणार्द्रा कीर्तिकरी कल्मषघ्नी क्रियाकरी ।
क्रियाशक्तिः कामरूपा कमलोत्पलगन्धिनी ॥ १११

कळा कळावती कूर्मी कूटस्था कञ्जसंस्थिता ।
काळिका कल्मषघ्नी च कमनीयजटान्विता ॥ ११२

करपद्माकराभीष्टप्रदा क्रतुफलप्रदा ।

कौशिकी कोशदा काव्या कर्त्री कोशेश्वरी कृशा ॥ ११३

कूर्मयाना कल्पलता कालकूटविनाशिनी ।
कल्पोद्यानवती कल्पवनस्था कल्पकारिणी ॥ ११४

कदंबकुसुमाभासा कदंबकुसुमप्रिया ।
कदंबोद्यानमध्यस्था कीर्तिदा कीर्तिभूषणा ॥ ११५

कुलमाता कुलावासा कुलाचारप्रियंकरी ।
कुलानाथा कामकला कलानाथा कलेश्वरी ॥ ११६

कुन्दमन्दारपुष्पाभा कपर्दस्थितचन्द्रिका ।
कवित्वदा काव्यमाता कविमाता कलाप्रदा ॥ ११७



मन्त्रः—
ओं सौः क्लीं ऐं ततो वद वद वाग्वादिनी स्वाहा ॥

तरुणी तरुणी ताता ताराधिपसमानना ।
तृप्तिस्तृप्तिप्रदा तर्क्या तपनी तापिनी तथा ॥ ११८
तर्पणी तीर्थरूपा च त्रिदशा त्रिदशेश्वरी ।
त्रिदिवेशी त्रिजननी त्रिमाता त्र्यंबकेश्वरी ॥ ११९
त्रिपुरा त्रिपुरेशानी त्र्यंबका त्रिपुरांबिका ।
त्रिपुरश्री स्त्रयीरूपा त्रयीवेद्या त्रयीश्वरी ॥ १२०
त्रय्यन्तवेदिनी ताम्रा तापत्रितयहारिणी ।
तमालसदृशी त्राता तरुणादित्यसन्निभा ॥ १२१
त्रैलोक्यव्यापिनी तृप्ता तृप्तिकृत्तत्वरूपिणी ।
तुर्या त्रैलोक्यसंस्तुत्या त्रिगुणा त्रिगुणेश्वरी ॥ १२२

त्रिपुरघ्नी त्रिमाता च त्र्यंबका त्रिगुणान्विता ।

तृष्णाच्छेदकरी तृप्ता तीक्ष्णा तीक्ष्णस्वरूपिणी ॥ १२३
तुलातुलादिरहिता तत्तद्ब्रह्मस्वरूपिणी ।
त्राणकर्त्री त्रिपापघ्नी त्रिपदा त्रिदशान्विता ॥ १२४
तथ्या त्रिशक्तिस्त्रिपदा तुर्या त्रैलोक्यसुन्दरी ।
तेजस्करी त्रिमूर्त्याद्या तेजोरूपा त्रिधा मता ॥ १२५
त्रिचक्रकर्त्री त्रिभगा तुर्यातीत फलप्रदा ।
तेजस्विनी तापहारी तापोपप्लुवनाशिनी ॥ १२६
तेजोगर्भा तपस्सारा त्रिपुरारिप्रियङ्करी ।
तन्वी तापससन्तुष्टा तपनांगजभीतिनुत ॥ १२७



त्रिलोचना त्रिमार्गा च तृतीया त्रिदशस्तुता ।

त्रिसुन्दरी त्रिपथगा तुरीयपददायिनी ॥ १२८

मन्त्रः—

ओं ह्रीं श्रीं क्लीं ऐं नमश्शुद्धफलदे ऐं वद वद वाग्वादिनी स्वाहा

शुभा शुभावती शान्ता शान्तिदा शुभदायिनी ।
शीतळा शूलिनी शीता श्रीमती च शुभान्विता ॥ १२९

मन्त्रः—

ओं ऐं यां यीं यूं यैं यौं यः ऐं वद वद वाग्वादिनी स्वाहा ॥

योगसिद्धिप्रदा योग्या यज्ञेन परिपूरिता ।
यज्या यज्ञमयी यक्षी यक्षिणी यक्षिवल्लभा ॥ १३०

यज्ञप्रिया यज्ञपूज्या यज्ञतुष्टा यमस्तुता ।
यामिनीयप्रभा याम्या यजनीया यशस्करी ॥ १३१



यज्ञकर्त्री यज्ञरूपा यशोदा यज्ञसंस्तुता ।

तृष्णाच्छेदकरी तृप्ता तीक्ष्णा तीक्ष्णस्वरूपिणी ॥ १२३
तुलातुलादिरहिता तत्तद्ब्रह्मस्वरूपिणी ।
त्राणकर्त्री त्रिपापघ्नी त्रिपदा त्रिदशान्विता ॥ १२४
तथ्या त्रिशक्तिस्त्रिपदा तुर्या त्रैलोक्यसुन्दरी ।
तेजस्करी त्रिमूर्त्याद्या तेजोरूपा त्रिधा मता ॥ १२५
त्रिचक्रकर्त्री त्रिभगा तुर्यातीत फलप्रदा ।
तेजस्विनी तापहारी तापोपप्लवनाशिनी ॥ १२६
तेजोगर्भा तपस्सारा त्रिपुरारिप्रियङ्करी ।
तन्वी तापससन्तुष्टा तपनांगजभीतिनुत ॥ १२७



त्रिलोचना त्रिमार्गा च तृतीया त्रिदशस्तुता ।

त्रिसुन्दरी त्रिपथगा तुरीयपददायिनी ॥ १२८

मन्त्रः—

ओं ह्रीं श्रीं क्लीं ऐं नमश्शुद्धफलदे ऐं वद वद वाग्वादिनी स्वाहा

शुभा शुभावती शान्ता शान्तिदा शुभदायिनी ।
शीतळा शूलिनी शीता श्रीमती च शुभान्विता ॥ १२९

मन्त्रः—

ओं ऐं यां यीं यूं यैं यौं यः ऐं वद वद वाग्वादिनी स्वाहा ॥

योगसिद्धिप्रदा योग्या यज्ञेन परिपूरिता ।
यज्या यज्ञमयी यक्षी यक्षिणी यक्षिवल्लभा ॥ १३०

यज्ञप्रिया यज्ञपूज्या यज्ञतुष्टा यमस्तुता ।
यामिनीयप्रभा याम्या यजनीया यशस्करी ॥ १३१



यज्ञकर्त्री यज्ञरूपा यशोदा यज्ञसंस्तुता ।

यज्ञेशी यज्ञफलदा योगयोनिर्यजुस्तुता ॥ १३२
यमिसेव्या यमाराध्या यमीपूज्या यमीश्वरी ।
योगिनी योगरूपा च योगकर्तृप्रियङ्करी ॥ १३३
योगयुक्ता योगमयी योगयोगीश्वरांबिका ।
योगज्ञानमयी योनिः यमाद्यष्टाङ्गयोगता ॥ १३४
यंत्रिताघौघसंहारा यमलोकनिवारिणी ।
यष्टिव्यष्टीश संस्तुत्या यमाद्यष्टाङ्गयोगयुक् ॥ १३५
योगीश्वरी योगमाता योगसिद्धा च योगदा ।
योगारूढा योगमयी योगरूपा यवीयसी ॥ १३६
यंत्ररूपा च यन्त्रस्था यन्त्रपूज्या च यन्त्रिता ।

युगकर्त्री युगमयी युगधर्मविवर्जिता ॥ १३७

यमुना यमिनी याम्या यमुनाजलमध्यगा ।

यातायातप्रशमनी यातनानान्निकृंतनी ॥ १३८

योगावासा योगिवन्द्या यत्तच्छब्दस्वरूपिणी ।

योगक्षेममयी यन्त्रा यावदक्षरमातृका ॥ १३९

यावत्पदमयी यावच्छब्दरूपा यथेश्वरी ।

यत्तदीया यक्षवन्द्या यद्विद्या यतिसंस्तुता ॥ १४०

यावद्विद्यामयी यावद्विद्यावृन्दसुवंदिता ।

योगिहृत्पद्मनिलया योगिवर्यप्रियंकरी ॥ १४१

योगिवन्द्या योगिमाता योगीशफलदायिनी ।



यक्षवंद्या यक्षपूज्या यक्षराजसुपूजिता ॥ १४२

यज्ञरूपा यज्ञतुष्टा यायजूकस्वरूपिणी ।
यन्त्राराध्या यन्त्रमध्या यन्त्रकर्तृप्रियङ्करी ॥ १४३
यन्त्रारूढा यन्त्रपूज्या योगिध्यानपरायणा ।
यजनीया यमस्तुत्या योगयुक्ता यशस्करी ॥ १४४
योगबद्धा यतिस्तुत्या योगज्ञा योगनायकी ।
योगिज्ञानप्रदा यक्षी यमबाधाविनाशिनी ॥ १४५
योगिकाम्यप्रदात्री च योगिमोक्षप्रदायिनी ॥
इति नाम्नां सरस्वत्याः सहस्रं समुदीरितम् ।
मन्त्रात्मकं महागोप्यं महासारस्वतप्रदम् ।
यः पठेच्छृणुयाद्भक्त्या त्रिकाले साधकः पुमान् ।

सर्वविद्यानिधिस्साक्षात् सएव भवति ध्रुवम् ॥
लभते संपदस्सर्वाः पुत्रपौत्रादिसंयुताः ।
मूकोपि सर्वविद्यासु चतुर्मुख इवापरः ॥
भूत्वा प्राप्नोति सान्निध्यं अंते धातुर्मुनीश्वर ।
सर्वमन्त्रमयं सर्वविद्यामानफलप्रदम् ॥
महाकवित्वदं पुंसां महासिद्धिप्रदायकम् ।
कस्मैचिन्न प्रदातव्यं प्राणैः कण्ठगतैरपि ॥
महारहस्यं सततं वाणीनामसहस्रकम्
सुसिद्धमस्मदादीनां स्तोत्रं ते समुदीरितम् ॥

इति श्रीस्कान्दपुराणान्तर्गत
सनत्कुमार संहितायां नारद सनत्कुमार संवादे
सरस्वतीसहस्रनामस्तोत्रं संपूर्णम्

॥ श्रीरस्तु ॥

# ॥ सरस्वतीसहस्रनामावळिः ॥

ओं वाचे नमः
वाण्यै
वरदायै
वन्द्यायै
वरारोहायै
वरप्रदायै



वृत्त्यै

ओं वागीश्वर्यै नमः
वार्तायै
वरायै १०
वागीशवल्लभायै
विश्वेश्वर्यै
विश्ववन्द्यायै
विश्वेशप्रियकारिण्यै

वाग्वादिन्यै
वाग्देव्यै
वृद्धिदायै
वृद्धिकारिण्यै
वृद्ध्यै
वृद्धायै २०
विषघ्न्यै
वृष्ट्यै
वृष्टिप्रदायिन्यै
विश्वाराध्यायै

विश्वमात्रे
विश्वधात्र्यै
विनायकायै
विश्वशक्त्यै
विश्वसारायै
विश्वायै ३०
विश्वविभावर्यै
वेदान्तवेदिन्यै
वेद्यायै
वित्तायै
वेदत्रयात्मिकायै

ओं वेदज्ञायै नमः
वेदजनन्यै
विश्वायै
विश्वविभावर्यै
वरेण्यायै ४०
वाङ्मय्यै
वृद्धायै
विशिष्टप्रियकारिण्यै
विश्वतोवदनायै
व्याप्तायै

ओं व्यापिन्यै नमः
व्यापकात्मिकायै
व्याळघ्न्यै
व्याळभूषांग्यै
विरजायै ५०
वेदनायिकायै
वेदवेदान्तसंवेद्यायै
वेदान्तज्ञानरूपिण्यै
विंभावर्यै
विक्रान्तायै

विश्वमित्रायै
विधिप्रियायै
वरिष्ठायै
विप्रकृष्टायै
विप्रवर्यप्रपूजितायै ६०
वेदरूपायै
वेदमय्यै
वेदमूर्त्यै
वल्लभायै
गौर्यै
गुणवत्यै
गोप्यायै
गन्धर्वनगरप्रियायै
गुणमात्रे
गुहांतस्थायै ७०
गुरुरूपायै
गुरुप्रियायै
गिरिविद्यायै
गानतुष्टायै
गायकप्रियकारिण्यै
गायत्र्यै
गिरिशाराध्यायै

ओं गिरे नमः
गिरीशप्रियङ्कर्यै
गिरिज्ञायै ८०
ज्ञानविद्यायै
गिरिरूपायै
गिरीश्वर्यै
गीर्मात्रे
गणसंस्तुत्यायै
गणनीयगुणान्वितायै
गूढरूपायै

ओं गुहायै नमः
गोप्यायै
गोरूपायै ९०
गवे
गुणात्मिकायै
गुर्व्यै
गुर्वम्बिकायै
गुह्यायै
गेयजायै
ग्रहनाशिन्यै

गृहिण्यै
गृहदोषघ्न्यै
गवघ्न्यै १००
गुरुवत्सलायै
गृहात्मिकायै
गृहाराध्यायै
गृहबाधाविनाशिन्यै
गङ्गायै
गिरिसुतायै
गम्यायै
गजयानायै

गुहस्तुतायै
गरुडासनसंसेव्यायै ११०
गोमत्यै
गुणशालिन्यै
शारदायै
शाश्वत्यै
शैव्यै
शांकर्यै
शङ्करात्मिकायै
श्रियै
शर्वाण्यै

ओं शतघ्न्यै नमः १२०
शरच्चन्द्रनिभाननायै
शर्मिष्ठायै
शमनघ्न्यै
शतसाहस्ररूपिण्यै
शिवायै
शंभुप्रियायै
श्रद्धायै
श्रुतिरूपायै
श्रुतिप्रियायै

ओं शुचिष्मत्यै नमः १३०
शर्मकर्यै
शुद्धिदायै
शुद्धिरूपिण्यै
शिवायै
शिवंकर्यै
शुद्धायै
शिवाराध्यायै
शिवात्मिकायै
श्रीमत्यै

श्रीमत्यै १४०
श्राव्यायै
श्रुत्यै
श्रवणगोचरायै
शान्त्यै
शान्तिकर्यै
शान्तायै
शान्ताचारप्रियङ्कर्यै
शीललभ्यायै
शीलवत्यै
[illegible] १५०

शुभकारिण्यै
शुभवाण्यै
शुद्धविद्यायै
शुद्धचित्तप्रपूजितायै
श्रीकर्यै
श्रुतपापघ्न्यै
शुभाक्ष्यै
शुचिवल्लभायै
शिवेतरघ्न्यै
शर्वर्यै १६०
श्रवणीयगुणान्वितायै

ॐ शार्यै नमः
शिरीषपुष्पाभायै
शमनिष्ठायै
शमात्मिकायै
शमान्वितायै
शमाराध्यायै
शितिकण्ठप्रपूजितायै
शुद्ध्यै
शुद्धिकर्यै १७०

ॐ श्रेष्ठायै नमः
श्रुतानन्तायै
शुभावहायै
सरस्वत्यै
सर्वज्ञायै
सर्वसिद्धिप्रदायिन्यै
सरस्वत्यै
सावित्र्यै
संध्यायै
सर्वेप्सितप्रदायै १८०

सर्वार्तिघ्न्यै
सर्वमय्यै
सर्वविद्याप्रदायिन्यै
सर्वेश्वर्यै
सर्वपुण्यायै
सर्गस्थित्यंतकारिण्यै
सर्वाराध्यायै
सर्वमात्रे
सर्वदेवनिषेवितायै
सर्वैश्वर्यप्रदायै १९०
सत्यायै

सत्यै
सत्वगुणाश्रयायै
स्वरक्रमपदाकारायै
सर्वदोषनिषूदिन्यै
सहस्राक्ष्यै
सहस्रास्यायै
सहस्रपदसंयुतायै
सहस्रहस्तायै
सहस्रगुणालंकृतविग्रहायै
सहस्रशीर्षायै

ओं सद्रूपायै नमः
स्वधायै
स्वाहायै
सुधामय्यै
षड्ग्रन्थिभेदिन्यै
सेव्यायै
सर्वलोकैकपूजितायै
स्तुत्यायै
स्तुतिमयायै २१०
साध्यायै

ओं सवितृप्रियकारिण्यै नमः
संशयच्छेदिन्यै
सांख्यवेद्यायै
संख्यायै
नदीश्वर्यै
सिद्धिदायै
सिद्धिसंपूज्यायै
सर्वसिद्धिप्रदायिन्यै
सर्वज्ञायै २२०
सर्वशक्त्यै

सर्वसंपत्प्रदायिन्यै
सर्वाशुभघ्न्यै
सुखदायै
सुखायै
संवित्स्वरूपिण्यै
सर्वसंभीषण्यै
सर्वजगत्सम्मोहिन्यै
सर्वप्रियङ्कर्यै
सर्वशुभदायै २३०
सर्वमङ्गळायै
सर्वमन्त्रमय्यै
सर्वतीर्थपुण्यफलप्रदायै
सर्वपुण्यमय्यै
सर्वव्याधिघ्न्यै
सर्वकामदायै
सर्वविघ्नहर्यै
सर्ववंदितायै
सर्वमङ्गळायै
सर्वमन्त्रकर्यै २४०
सर्वलक्ष्म्यै
सर्वगुणान्वितायै
सर्वानन्दमय्यै

ओं सर्वज्ञानदायै नमः
सत्यनायिकायै
सर्वज्ञानमय्यै
सर्वराज्यदायै
सर्वमुक्तिदायै
सुप्रभायै
सर्वदायै २५०
सर्वायै
सर्वलोकवशंकर्यै
सुभगायै

ओं सुन्दर्यै नमः
सिद्धायै
सिद्धांबायै
सिद्धमातृकायै
सिद्धमात्रे
सिद्धविद्यायै
सिद्धेश्यै २६०
सिद्धरूपिण्यै
सुरूपिण्यै
सुखमय्यै

सेवकप्रियकारिण्यै
स्वामिन्यै
सर्वदायै
सेव्यायै
स्थूलसूक्ष्मापरांबिकायै
साररूपायै
सरोरूपायै २७०
सत्यभूतायै
समाश्रयायै
सितासितायै
सरोजाक्ष्यै

सरोजासनवल्लभायै
सरोरुहाभायै
सर्वांग्यै
सुरेन्द्रादिप्रपूजितायै
महादेव्यै
महेशान्यै २८०
महासारस्वतप्रदायै
महासरस्वत्यै
मुक्तायै
मुक्तिदायै
मलनाशिन्यै

ओं महेश्वर्यै नमः
महानन्दायै
महामन्त्रमय्यै
मह्यै
महालक्ष्म्यै २९०
महाविद्यायै
मात्रे
मन्दरवासिन्यै
मन्त्रगम्यायै
मन्त्रमात्रे

ओं महामन्त्रफलप्रदायै
महामुक्त्यै
महानित्यायै
महासिद्धिप्रदायिन्यै
महासिद्धायै ३००
महामात्रे
महदाकारसंयुतायै
महायै
महेश्वर्यै
मूर्त्यै

मोक्षदायै

मणिभूषणायै

मेनकायै

मानिन्यै

मान्यायै ३१०

मृत्युघ्न्यै

मेरुरूपिण्यै

मदिराक्ष्यै

मदावासायै

मखरूपायै

मखेश्वर्यै

महामोहायै

महामायायै

मातॄणांमूर्ध्निसंस्थितायै

महापुण्यायै ३२०

मुदावासायै

महासंपत्प्रदायिन्यै

मणिपूरैकनिलयायै

मधुरूपायै

महोत्कटायै

महासूक्ष्मायै

ओं महाशान्तायै नमः
महाशान्तिप्रदायिन्यै
मुनिस्तुतायै
मोहहन्त्र्यै ३३०
माधव्यै
माधवप्रियायै
मायायै
महादेवसंस्तुत्यायै
महिषीगणपूजितायै
मृष्टान्नदायै

ओं माहेन्द्र्यै नमः
महेन्द्रपददायिन्यै
मत्यै
मतिप्रदायै ३४०
मेधायै
मर्त्यलोकनिवासिन्यै
मुख्यायै
महानिवासायै
महाभाग्यजनाश्रितायै
महिळायै

महिमायै
मृत्युहार्यै
मेधाप्रदायिन्यै
मेध्यायै १५०
महावेगवत्यै
महामोक्षफलप्रदायै
महाप्रभाभायै
महत्यै
महादेवप्रियङ्कर्यै
महापोषायै

महर्ध्यै

मुक्ताहारविभूषणायै
माणिक्यभूषणायै
मन्त्रायै १६०
मुख्यचन्द्रार्धशेखरायै
मनोरूपायै
मनश्शुद्ध्यै
मनश्शुद्धिप्रदायिन्यै
महाकारुण्यसंपूर्णायै
मनोनमनवन्दितायै
महापातकजालघ्न्यै

ओं मुक्तिदायै नमः
मुक्तभूषणायै
मनोन्मन्यै ३५०
महास्थूलायै
महाक्रतुफलप्रदायै
महापुण्यफलप्राप्यायै
मायात्रिपुरनाशिन्यै
महानसायै
महामेधायै
महामोदायै

ओं महामहेश्वर्यै नमः
मालाधर्यै
महोपायायै ३८०
महातीर्थफलप्रदायै
महामङ्गळसंपूर्णायै
महादारिद्र्यनाशिन्यै
महामखायै
महामेघायै
महाकाल्यै
महाप्रियायै

महाभूषायै
महादेहायै
महाराज्ञ्यै ३९०
मुदालयायै
भूरिदायै
भाग्यदायै
भोग्यायै
भोग्यदायै
भोगदायिन्यै
भवान्यै
भूतिदायै

भूत्यै
भूम्यै ४००
भूमिसुनायिकायै
भूतधात्र्यै
भयहर्यै
भक्तसारस्वतप्रदायै
भुक्त्यै
भुक्तिप्रदायै
भेक्यै
भक्त्यै
भक्तिप्रदायिन्यै

ओं भक्तसायुज्यदायै नमः ४१०
भक्तस्वर्गदायै
भक्तराज्यदायै
भागीरथ्यै
भवाराध्यायै
भाग्यसज्जनपूजितायै
भवस्तुत्यायै
भानुमत्यै
भवसागरतारण्यै
भूत्यै

ओं भूषायै नमः ४२०
भूतेश्यै
फाललोचनपूजितायै
भूतायै
भव्यायै
भविष्यायै
भवविद्यायै
भवात्मिकायै
बाधापहारिण्यै
बन्धुरूपायै

भुवनपूजितायै ४३०
भवघ्न्यै
भक्तिलभ्यायै
भक्तरक्षणतत्परायै
भक्तार्तिशमन्यै
भाग्यायै
भोगदानकृतोद्यमायै
भुजङ्गभूषणाय
भीमायै
भीमाक्ष्यै
भीमरूपिण्यै ४४०

भाविन्यै
भ्रातृरूपायै
भारत्यै
भवनायिकायै
भाषायै
भाषावत्यै
भीष्मायै
भैरव्यै
भैरवप्रियायै
भूत्यै ४५०
भासितसर्वाङ्ग्यै

ओं. भूतिदायै नमः
भूतिनायिकायै
भास्वत्यै
भगमालायै
भिक्षादानकृतोद्यमायै
भिक्षुरूपायै
भक्तिकर्यै
भक्तलक्ष्मीप्रदायिन्यै
भ्रान्तिघ्नायै ४६०
भ्रान्तिरूपायै

ओं भूतिदायै नमः
भूतिकारिण्यै
भिक्षणीयायै
भिक्षुमात्रे
भाग्यवद्दृष्टिगोचरायै
भोगवत्यै
भोगरूपायै
भोगमोक्षफलप्रदायै
भोगश्रान्तायै ४७०
भाग्यवत्यै

भक्ताघौघविनाशिन्यै
ब्राह्म्यै
ब्रह्मस्वरूपायै
बृहत्यै
ब्रह्मवल्लभायै
ब्रह्मदायै
ब्रह्ममात्रे
ब्रह्माण्यै
ब्रह्मदायिन्यै ४८०
ब्रह्मेश्यै
ब्रह्मसस्तुत्यायै

ब्रह्मवेद्यायै
बुधप्रियायै
बालेन्दुशेखरायै
बालायै
बलिपूजाकरप्रियायै
बलदायै
बिन्दुरूपायै
बालसूर्यसमप्रभायै ४९०
ब्रह्मरूपायै
ब्रह्ममय्यै
ब्रध्नमण्डलमध्यगायै

ॐ ब्रह्माण्यै नमः
बुद्धिदायै
बुद्ध्यै
बुद्धिरूपायै
बुधेश्वर्यै
बन्धक्षयकर्यै
बाधनाशिन्यै ५००
बन्धुरूपिण्यै
बिन्दुरूपायै
बिन्दुभूषायै

ॐ बिन्दुनादसमन्वितायै
बीजरूपायै
बीजमात्रे
ब्रह्मण्यायै
ब्रह्मकारिण्यै
बहुरूपायै
बलवत्यै ५१०
ब्रह्मजायै
ब्रह्मचारिण्यै
ब्रह्मस्तुत्यायै

ब्रह्मविद्यायै
ब्रह्माण्डाधिपवल्लभायै
ब्रह्मेशविष्णुरूपायै
ब्रह्मविष्ण्वीशसंस्थितायै
बुद्धिरूपायै
बुधेशान्यै
बन्ध्यै ५२०
बन्धविमोचन्यै
अक्षमालायै
अक्षराकारायै
अक्षरायै

अक्षरफलदायै
अनन्तायै
आनन्दसुखदायै
अनन्तचन्द्रनिभाननायै
अनन्तमहिमायै
अघोरायै ५३०
अनन्तगम्भीरसम्भितायै
अदृष्टायै
अदृष्टदायै
अनन्तायै
अदृष्टभाग्यफलप्रदायै

ओं अरुन्धत्यै नमः
अव्ययीनाथायै
अनेकसद्गुणसंयुतायै
अनेकभूषणायै
अदृश्यायै ५४०
अनेकलेखनिषेवितायै
अनन्तायै
अनन्तसुखदायै
अघोरायै
अघोरस्वरूपिण्यै

ओं अशेषदेवतारूपायै
अमृतरूपायै
अमृतेश्वर्यै
अनवद्यायै
अनेकहस्तायै ५५०
अनेकमाणिक्यभूषणायै
अनेकविघ्नसंहर्त्र्यै
अनेकाभरणान्वितायै
अविद्यायै
अज्ञानसंहर्त्र्यै

अविद्याजालनाशिन्यै
अभिरूपायै
अनवद्याङ्ग्यै
अप्रतर्क्यगतिप्रदायै
अकळङ्कारूपिण्यै ५६०
अनुग्रहपरायणायै
अम्बरस्थायै
अम्बरमयायै
अम्बरमालायै
अम्बुजेक्षणायै
अम्बिकायै

अब्जकरायै
अब्जस्थायै
अंशुमत्यै
अंशुशतान्वितायै ५७०
अम्बुजायै
अनवरायै
अखण्डायै
अम्बुजासनमहाप्रियायै
अजरामरसंसेव्यायै
अजरसेवितपद्युगायै
अतुलार्थप्रदायै

ओं अर्थैक्यायै नमः
अत्युदारायै
अभयान्वितायै ५८०
अनाथवत्सलायै
अनन्तप्रियायै
अनन्तेप्सितप्रदायै
अम्बुजाक्ष्यै
अम्बुरूपायै
अम्बुजातोद्भवमहाप्रियायै

ओं अखण्डायै नमः
अमरस्तुत्यायै
अमरनायकपूजितायै
अजेयायै ५९०
अजसङ्काशायै
अज्ञाननाशिन्यै
अभीष्टदायै
अक्तायै
अघनेनायै
अस्त्रेश्यै

अलक्ष्मीनाशिन्यै
अनन्तसारायै
अनन्तश्रियै
अनन्तविधिपूजितायै ६००
अभीष्टायै
अमर्त्यसम्पूज्यायै
अस्तोदयविवर्जितायै
आस्तिकस्वान्तनिलयायै
अब्जरूपायै
अब्जवत्यै
अस्खलत्यै

अस्खलद्रूपायै
अस्खलद्विद्याप्रदायिन्यै
अस्खलत्सिद्धिदायै ६१०
आनन्दायै
अम्बुजायै
अमरनायिकायै
अमेयायै
अशेषपापघ्न्यै
अक्षयसारस्वतप्रदायै
जयायै
जयन्त्यै

ओं जयदायै नमः
जन्मकर्मविवर्जितायै ६२०
जगत्प्रियायै
जगन्मात्रे
जगदीश्वरवल्लभायै
जात्यै
जयायै
जितामित्रायै
जप्यायै
जपनकारिण्यै

ओं जीवन्यै नमः
जीवनिलयायै ६३०
जीवाख्यायै
जीवधारिण्यै
जाह्नव्यै
ज्यायै
जपवत्यै
जातिरूपायै
जयप्रदायै
जनार्दनप्रियकर्यै

जोषनीयायै
जगत्स्थितायै ६४०
जगज्ज्येष्ठायै
जगन्मायायै
जीवनत्राणकारिण्यै
जीवातुलतिकायै
जीवजन्म्यै
जन्मनिबर्हण्यै
जाड्यविध्वंसनकर्यै
जगद्योनये
जयात्मिकायै

जगदानन्दजनन्यै ६५०
जम्ब्यै
जलजेक्षणायै
जयन्त्यै
जङ्गपूगघ्न्यै
जनितज्ञानविग्रहायै
जटायै
जटावत्यै
जप्यायै
जपकर्तृप्रियङ्कर्यै
जपकृत्पापसंहर्त्र्यै ६६०

ओं जपकृत्फलदायिन्यै नमः
जपापुष्पसमप्रख्यायै
जपाकुसुमधारिण्यै
जनन्यै
जन्मरहितायै
ज्योतिर्वृत्यभिदायिन्यै
जटाजूटनचन्द्रार्धायै
जगत्सृष्टिकर्यै
जगत्त्राणकर्यै
जाड्यध्वंसनकर्त्र्यै ६७०

ओं जयेश्वर्यै नमः
जगद्बीजायै
जयावासायै
जन्मभुवे
जन्मनाशिन्यै
जन्मान्त्यरहितायै
जैत्र्यै
जगद्योनये
जपात्मिकायै
जयलक्षणसम्पूर्णायै ६८०

जयध्वनकृतोद्यमायै
जंभराद्यादिसंस्तुत्यायै
जंभारिफलदायिन्यै
जगत्त्रयहितायै
ज्येष्ठायै
जगत्त्रयवशङ्कर्यै
जगत्त्रयाम्बायै
जगत्यै
ज्वालायै
ज्वालितलोचनायै ६९०
ज्वालिन्यै

ज्वलनाभासायै
ज्वलन्त्यै
ज्वलनात्मिकायै
जितारातिसुरस्तुत्यायै
जितक्रोधायै
जितेन्द्रियायै
जरामरणशून्यायै
जनित्र्यै
जन्मनाशिन्यै ७००
जलजाभायै
जलमय्यै

ॐ जलजासनवल्लभायै
जलजस्थायै
जपाराध्यायै
जनमङ्गळकारिण्यै
कामिन्यै
कामरूपायै
काम्यायै
कामप्रदायिन्यै ७१०
कमाल्यै
कामदायै

ॐ कर्त्र्यै नमः
क्रतुकर्मफलप्रदायै
कृतघ्नघ्न्यै
क्रियारूपायै
कार्यकारणरूपिण्यै
कञ्जाक्ष्यै
करुणारूपायै
केवलामरसेवितायै ७२०
कल्याणकारिण्यै
कान्तायै

कान्तिदायै
कान्तिरूपिण्यै
कमलायै
कमलावासायै
कमलोत्पलमालिन्यै
कुमुद्वत्यै
कल्याण्यै
कान्त्यै ७३०
कामेशवल्लभायै
कामेश्वर्यै
कमलिन्यै

कामदायै
कामबन्धिन्यै
कामधेन्वे
काञ्चनाक्ष्यै
काञ्चनाभायै
कळानिधये
क्रियायै ७४०
कीर्तिकर्यै
कीर्त्यै
क्रतुश्रेष्ठायै
क्रतेश्वर्यै

ॐ क्रतुसर्वक्रियास्तुत्यायै नमः
क्रतुकृत्प्रियकारिण्यै
क्लेशनाशकर्यै
कर्त्र्यै
कर्मदायै
कर्मबन्धिन्यै ७५०
कर्मबन्धहर्यै
कृष्टायै
क्लमघ्न्यै

ॐ कञ्जलोचनायै मनः
कन्दर्पजनन्यै
कान्तायै
करुणायै
करुणावत्यै
क्लींकारिण्यै
कृपाकारायै ७६०
कृपासिन्धवे
कृपावत्यै
करुणार्द्रायै

कीर्तिकर्यै
कल्मषघ्नै
क्रियाकर्यै
क्रियाशक्त्यै
कामरूपायै
कमलोत्पलगन्धिन्यै
कळायै ७७०
कळावत्यै
कूर्म्यै
कूटस्थायै
कञ्जसंस्थितायै

कालिकायै
कल्मषघ्न्यै
कमनीयजटान्वितायै
करपद्मायै
कराभीष्टप्रदायै
क्रतुफलप्रदायै ७८०
कौशिक्यै
कोशदायै
कान्यायै
कत्र्यै
कोशेश्वर्यै

ओं कृशायै नमः
कूर्मयानायै
कल्पलतायै
कालकूटविनाशिन्यै
कल्पोद्यानवत्यै ७५०
कल्पवनस्थायै
कल्पकारिण्यै
कदम्बकुसुमाभासायै
कदम्बकुसुमप्रियायै
कदम्बोद्यानमध्यस्थायै

ओं कीर्तिदायै नमः
कीर्तिभूषणायै
कुलमात्रे
कुलावासायै
कुलाचारप्रियङ्कर्यै ८००
कुलनाथायै
कामकलायै
कलानाथायै
कलेश्वर्यै
कुन्दमन्दारपुष्पाभायै

कपर्दस्थितचन्द्रिकायै
कवित्वदायै
काम्यमात्रे
कविमात्रे
कळाप्रदायै ८१०
तरुण्यै
तरुणीतातायै
ताराधिपसमाननायै
तृप्तये,
तृप्तिप्रदायै
तर्क्ष्यायै

तपन्यै
तापिन्यै
तर्पण्यै
तीर्थरूपायै ८२०
त्रिदशायै
त्रिदशेश्वर्यै
त्रिदिवेश्यै
त्रिजनन्यै
त्रिमात्रे
त्र्यम्बकेश्वर्यै
त्रिपुरायै

ओं त्रिपुरेशान्यै नमः
त्र्यम्बकायै
त्रिपुराम्बिकायै ८१०
त्रिपुरश्रियै
त्रयीरूपायै
त्रयीवेद्यायै
त्रयीश्वर्यै
त्रय्यन्तवेदिन्यै
ताम्रायै
तापत्रितयहारिण्यै

ओं तमालसदृश्यै नमः
त्रात्रे
तरुणादित्यसन्निभायै ८४०
त्रैलोक्यव्यापिन्यै
तृप्तायै
तृप्तिकृते
तत्वरूपिण्यै
तुर्यायै
त्रैलोक्यसंस्तुतायै
त्रिगुणायै

त्रिगुणेश्वर्यै
त्रिपुरघ्न्यै
त्रिमात्रे ८५०
त्र्यंबकायै
त्रिगुणान्वितायै
तृष्णाच्छेदकर्यै
तृप्तायै
तीक्ष्णायै
तीक्ष्णस्वरूपिण्यै
तुलायै
तुलादिरहितायै

तत्तद्ब्रह्मस्वरूपिण्यै
त्राणकर्त्र्यै ८६०
त्रिपापघ्न्यै
त्रिपदायै
त्रिदशान्वितायै
तथ्यायै
त्रिशक्त्यै
त्रिपदायै
तुर्यायै
त्रैलोक्यसुन्दर्यै
तेजस्कर्यै

ओं त्रिमूर्त्याद्यायै ८७०
तेजोरूपायै
त्रिधामतायै
त्रिचक्रकर्त्र्यै
त्रिभगायै
तुर्यातीतफलप्रदायै
तेजस्विन्यै
तापहर्यै
तापोपप्लवनाशिन्यै
तेजोगर्भायै

ओं तपस्सारायै ८८०
त्रिपुरारिप्रियङ्कर्यै
तन्व्यै
तापससंतुष्टायै
तपताङ्गजभीतिनुदे
त्रिलोचनायै
त्रिमार्गायै
तृतीयायै
त्रिदशस्तुतायै
त्रिसुन्दर्यै

| | | | |
|---|---|---|---|
| त्रिपथगायै | ८९० | शुभान्वितायै | |
| तुरीयपददायिन्यै | | योगसिद्धिप्रदायै | |
| शुभायै | | योग्यायै | |
| शुभावत्यै | | यज्ञेनपरिपूरितायै | |
| शान्तायै | | यज्ञायै | |
| शन्तिदायै | | यज्ञमय्यै | |
| शुभदायिन्यै | | यक्ष्यै | |
| शीतळायै | | यक्षिण्यै | |
| शूलिन्यै | | यक्षिवल्लभायै | |
| शीतायै | | यज्ञप्रियायै | ९१० |
| श्रीमत्यै | ९०० | यज्ञपूज्यायै | |

ओं यज्ञतुष्टायै नमः
यमस्तुतायै
यामिनीयप्रभायै
याम्यायै
यजनीयायै
यशस्कर्यै
यज्ञकर्त्र्यै
यज्ञरूपायै
यशोदायै ९२०
यज्ञसंस्तुत्यायै

ओं यज्ञेश्यै नमः
यज्ञफलदायै
योगयोनये
यजुस्तुतायै
यमिसेव्यायै
यमाराध्यायै
यमिपूज्यायै
यमीश्वर्यै
योगिन्यै ९३०
योगरूपायै

योगकर्तृप्रियङ्कर्यै
योगयुक्तायै
योगमय्यै
योगयोगीश्वराम्बिकायै
योगज्ञानमय्यै
योनये
यमाद्यष्टाङ्गयोगयुतायै
यन्त्रिताघौघसंहारायै
यमलोकनिवारिण्यै १४०
यष्टिव्यष्टीशसंस्तुत्यायै

यमाद्यष्टाङ्गयोगयुजे
योगीश्वर्यै
योगमात्रे
योगसिद्धायै
योगदायै
योगारूढायै
योगमय्यै
योगरूपायै
यवीयस्यै १५०
यन्त्ररूपायै
यन्त्रस्थायै

ओं यन्त्रपूज्यायै नमः

यन्त्रितायै

युगकर्त्र्यै

युगमय्यै

युगधर्मविवर्जितायै

यमुनायै

यमिन्यै

याम्यायै ९६०

यमुनाजलमध्यगायै

यातायातप्रशमन्यै

ओं यातनानान्निकृन्तन्यै नमः

योगावासायै

योगिवन्द्यायै

यत्तच्छब्दस्वरूपिण्यै

योगक्षेममय्यै

यन्त्रायै

यावदक्षरमातृकायै

यावत्पदमय्यै ९७०

यावच्छब्दस्वरूपायै

यथेश्वर्यै
यत्तदीयायै
यक्षवन्द्यायै
यद्विद्यायै
यतिसंस्तुतायै
यावद्विद्यामय्यै
यावद्विद्यावृन्दसुवन्दितायै
योगिहृत्पद्मनिलयायै
योगिवर्यप्रियङ्कर्यै 980
योगिवन्द्यायै

योगिमात्रे
योगीशफलदायिन्यै
यक्षवन्द्यायै
यक्षपूज्यायै
यक्षराजसुपूजितायै
यज्ञरूपायै
यज्ञतुष्टायै
यायजूकस्वरूपिण्यै
यन्त्राराध्यायै 990
यन्त्रमध्यायै
यन्त्रकर्तृप्रियङ्कर्यै

ओं यन्त्रारूढायै नमः
यन्त्रपूज्यायै
योगिध्यानपरायणायै
यजनीयायै
यमस्तुत्यायै
योगयुक्तायै
यशस्कर्यै
योगबद्धायै १०००

ओं यतिस्तुत्यायै नमः
योगज्ञायै
योगनायक्यै
योगिज्ञानप्रदायै
यक्ष्यै
यमबाधाविनाशिन्यै
योगिकाम्यप्रदात्र्यै
योगिमोक्षप्रदायिन्यै १००८

सरस्वतीसहस्रनामावलिस्समाप्ता ॥

॥ श्रीरस्तु ॥

# ॥ सरस्वत्यष्टोत्तरशतनामस्तोत्रम् ॥

सरस्वती महाभद्रा महामाया वरप्रदा ।
श्रीप्रदा पद्मनिलया पद्माक्षी पद्मवक्त्रका ॥ १
शिवानुजा पुस्तकभृत् ज्ञानमुद्रा रमा परा ।
कामरूपा महाविद्या महापातकनाशिनी ॥ २
महाश्रया मालिनी च महाभोगा महाभुजा ।
महाभागा महोत्साहा दिव्याङ्गा सुरवन्दिता ॥ ३
महाकाळी महापाशा महाकारा महाङ्कुशा ।
पीता च विमला विश्वा विद्युन्माला च वैष्णवी ॥ ४
चन्द्रिका चन्द्रवदना चन्द्र लेखाविभूषिता ।

सावित्री सुरसा देवी दिव्यालङ्कारभूषिता ।। ५
वाग्देवी वसुदा तीव्रा महाभद्रा महाबला ।
भोगदा भारती भामा गोविन्दा गोमती शिवा ।। ६
जटिला विन्ध्यवासा च विन्ध्याचलविराजिता ।
चण्डिका वैष्णवी ब्राह्मी ब्रह्मज्ञानैकसाधना ।। ७
सौदामिनी सुधामूर्तिं स्सुभद्रा सुरपूजिता ।
सुवासिनी सुनासा च विनिद्रा पद्मलोचना ।। ८
विद्यारूपा विशालाक्षी ब्रह्मजाया महाफला ।
त्रयीमूर्तिः त्रिकालज्ञा त्रिगुणा शास्त्ररूपिणी ।। ९



शुम्भासुरप्रमथिनी शुभदा च स्वरात्मिका ।

रक्तबीजनिहन्त्री च चामुण्डा चाम्बिका तथा ॥ १०
मुण्डकायप्रहरणा धूम्रलोचनमर्दना ।
सर्वदेवस्तुता सौम्या सुरासुरनमस्कृता ॥ ११
काळरात्री कलाधारा रूपसौभाग्यदायिनी ।
वाग्देवी च वरारोहा वाराही वारिजासना ॥ १२
चित्रांबरा चित्रगन्धा चित्रमाल्यविभूषिता ।
कान्ता कामप्रदा वन्द्या विद्याधरसुपूजिता ॥ १३
श्वेतानना नीलभुजा चतुर्वर्गफलप्रदा ।
चतुरानन साम्राज्या रक्तमध्या निरञ्जना ॥ १४
हंसासना नीलजङ्घा ब्रह्मविष्णुशिवात्मिका ।
एवं सरस्वतीदेव्या नाम्नामष्टोत्तरं शतम् ॥


इति सरस्वत्यष्टोत्तरशतनामस्तोत्रं संपूर्णम् ॥

॥ श्रीरस्तु ॥

# ॥ सरस्वत्यष्टोत्तरशतनामावळिः ॥

ओं सरस्वत्यै नमः

महाभद्रायै

महामायायै

वरप्रदायै

श्रीप्रदायै

पद्मनिलयायै

पद्माक्ष्यै

पद्मवक्त्रायै

ओं शिवानुजायै नमः

पुस्तकभृते १०

ज्ञानमुद्रायै

रमायै

परायै

कामरूपायै

महाविद्यायै

महापातकनाशिन्यै

महाश्रयायै
मालिन्यै
महाभोगायै
महाभुजायै २०
महाभागायै
महोत्साहायै
दिव्याङ्गायै
सुरवन्दितायै
महाकाल्यै
महापाशायै
महाकारायै

महाङ्कुशायै
पीतायै
विमलायै ३
विश्वायै
विद्युन्मालायै
वैष्णव्यै
चन्द्रिकायै
चन्द्रवदनायै
चन्द्रलेखाविभूषितायै
सात्त्विक्यै
सुरसायै

ओं देव्यै नमः

दिव्यालङ्कारभूषितायै ४०
वाग्देव्यै
वसुधायै
तीव्रायै
महाभद्रायै
महाबलायै
भोगदायै
भारत्यै
भामायै

ओं गोविन्दायै नमः

गोमत्यै ५०
शिवायै
जटिलायै
विन्ध्यवासायै
विन्ध्याचलविराजितायै
चण्डिकायै
वैष्णव्यै
ब्राह्म्यै
ब्रह्मज्ञानैकसाधनायै

सौदामिन्यै
सुधामूर्त्यै ६०
सुभद्रायै
सुरपूजितायै
सुवासिन्यै
सुनासायै
विनिद्रायै
पद्मलोचनायै
विद्यारूपायै
विशालाक्ष्यै
ब्रह्मजायायै

महाफलायै ७०
त्रयीमूर्त्यै
त्रिकालज्ञायै
त्रिगुणायै
शास्त्ररूपिण्यै
शुम्भासुरप्रमथिन्यै
शुभदायै
स्वरात्मिकायै
रक्तबीजनिहन्त्र्यै
चामुण्डायै
अम्बिकायै ८०

ओं मुण्डकायप्रहरणायै नमः
धूम्रलोचनमर्दनायै
सर्वदेवस्तुतायै
सौम्यायै
सुरासुरनमस्कृतायै
काळरात्र्यै
कलाधारायै
रूपसौभाग्यदायिन्यै
वाग्देव्यै
वरारोहायै ९०

ओं वाराह्यै नमः
वारिजासनायै
चित्राम्बरायै
चित्रगन्धायै
चित्रमाल्यविभूषितायै
कान्तायै
कामप्रदायै
वन्द्यायै
विद्याधरसुपूजितायै
श्वेताननायै १००

| | |
|---|---|
| नीलभुजायै | निरञ्जनायै |
| चतुर्वर्गफलप्रदायै | हंसासनायै |
| चतुराननसाम्राज्यायै | नीलजङ्घायै |
| रक्तमध्यायै | ब्रह्मविष्णुशिवात्मिकायै १०८ |

सरस्वत्यष्टोत्तरशतनामावलिस्समाप्ता ॥

## सरस्वतीद्वादशनामस्तोत्रम्

सरस्वती त्वियं दृष्टा वीणापुस्तकधारिणी ।
हंसवाहसमायुक्ता विद्यादानकरी मम ॥ १
प्रथमं भारतीनाम द्वितीयं च सरस्वती ।
तृतीयं शारदा देवी चतुर्थी हंसवाहनी ॥ २
पंचमं जगती ख्यातं षष्ठं वाणीश्वरी तथा ।
कौमारी सप्तमं प्रोक्तमष्टमं ब्रह्मचारिणी ॥ ३

नवमं बुद्धिदात्री च दशमं वरदायिनी ।
एकादशं क्षुद्रघण्टा द्वादशं भुवनेश्वरी ॥ ४
ब्राह्मी द्वादशनामानि त्रिसन्ध्यं यः पठेन्नरः ।
सर्वसिद्धिकरी तस्य प्रसन्ना परमेश्वरी ॥ ५
सा मे वसतु जिह्वाग्रे ब्रह्मरूपा सरस्वती ।

इति श्रीसरस्वती द्वादशनामस्तोत्रं सम्पूर्णम् ॥

## सरस्वतीस्तोत्रम्

या कुन्देन्दु तुषारहारधवळा या शुभ्रवस्त्रावृता
या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना ।
या ब्रह्माच्युतशङ्करप्रभृतिभिर्देवैस्सदा पूजिता
सा मां पातु सरस्वती भगवती निश्शेषजाड्यापहा ॥ १

दोर्भिर्युक्ता चतुर्भिः स्फटिकमणिनिभै रक्षमालां दधाना
हस्तेनैकेन पद्मं सितमपि च शुकं पुस्तकं चापरेण ।
भासा कुन्देन्दुशङ्खस्फटिकमणिनिभा भासमानाऽसमाना
सा मे वाग्देवतेयं निवसतु वदने सर्वदा सुप्रसन्ना ॥ २
सुरासुरासेवितपादपङ्कजा करे विराजत्कमनीयपुस्तका ।
विरिञ्चिपत्नी कमलासनस्थिता सरस्वती नृत्यतु वाचि मे सदा ॥
सरस्वती सरसिजकेसरप्रभा तपस्विनी सितकमलासनप्रिया ।
घनस्तनी कमलविलोललोचना मनस्विनी भवतु वरप्रसादिनी ॥४
सरस्वति नमस्तुभ्यं वरदे कामरूपिणि ।
विद्यारंभं करिष्यामि सिद्धिर्भवतु मे सदा ॥ ५
सरस्वति नमस्तुभ्यं सर्वदेवि नमो नमः ।

शान्तरूपे शशिधरे सर्वयोगे नमो नमः ॥ ६

नित्यानन्दे निराधारे निष्कळायै नमोनमः ।
विद्याधरे विशालाक्षि शुद्धज्ञाने नमोनमः ॥ ७
शुद्धस्फटिकरूपायै सूक्ष्मरूपे नमोनमः ।
शब्दब्राह्मि चतुर्हस्ते सर्वसिद्ध्यै नमोनमः ॥ ८
मुक्तालंकृत सर्वाङ्ग्यै मूलाधारे नमोनमः ।
मूलमन्त्रस्वरूपायै मूलशक्त्यै नमोनमः ॥ ९
मनो मणिमहायोगे वागीश्वरि नमोनमः ।
वाग्भ्यै वरदहस्तायै वरदायै नमोनमः ॥ १०
वेदायै वेदरूपायै वेदान्तायै नमोनमः ।
गुणदोषविवर्जिन्यै गुणदीप्त्यै नमोनमः ॥ ११

सर्वज्ञाने सदानन्दे सर्वरूपे नमोनमः ।
सम्पन्नायै कुमार्यैच सर्वज्ञं ते नमोनमः ॥ १२
योगानार्थं उमादेव्यै योगानन्दे नमोनमः ।
दिव्यज्ञान त्रिनेत्रायै दिव्यमूर्त्यै नमोनमः ॥ १३
अर्धचन्द्रजटाधरि चन्द्रबिम्बे नमोनमः ।
चन्द्रादित्यजटाधारि चन्द्रबिम्बे नमोनमः ॥ १४
अणुरूपे महारूपे विश्वरूपे नमोनमः ।
अणिमाद्यष्टसिद्धायै आनन्दायै नमोनमः ॥ १५
ज्ञान विज्ञान रूपायै ज्ञानमूर्तें नमोनमः ।
नानाशास्त्र स्वरूपायै नानारूपे नमोनमः ॥ १६
पञ्चदा पञ्चवंशा च पञ्चरूपे नमोनमः ।

परमेष्ठ्यै परामूर्त्यै नमस्ते पापनाशिनि ॥ १७
महादेव्यै महाकाल्यै महालक्ष्म्यै नमोनमः ।
ब्रह्मविष्णुशिवायै च ब्रह्मनार्यै नमोनमः ॥ १८
कमलाकरपुष्पा च कामरूपे नमोनमः ।
कपालि कर्मदीप्तायै कर्मदायै नमोनमः ॥ १९
सायं प्रातः पठेन्नित्यं षाण्मासात्सिद्धिरुच्यते ।
घोरव्याघ्रभयं नास्ति पठतां शृण्वतामपि ॥ २०
इत्थं सरस्वतीस्तोत्रमगस्त्यमुनिवाचकं ।
सर्वसिद्धिकरं नृणां सर्वपापप्रणाशनम् ॥ २१



इत्यगस्त्यमुनि प्रोक्तं सरस्वतीस्तोत्रं सम्पूर्णम् ॥

## ॥ सरस्वत्यष्टकम् ॥

शतानीक उवाच—

महामते महाप्राज्ञ सर्वशास्त्र विशारद ।
अक्षीणकर्मबन्धस्तु पुरुषो द्विजसत्तम ॥ १

मरणे यज्जपेज्जप्यं यं च भावमनुस्मरन् ।
परंपदमवाप्नोति तन्मे ब्रूहि महामुने ॥ २

शौनक उवाच—इदमेव महाराज पृष्टवांस्ते पितामहः ।
भीष्मं धर्मविदां श्रेष्ठं धर्मपुत्रो युधिष्ठिरः ॥ ३

युधिष्ठिर उवाच—पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
बृहस्पति स्तुता देवी वागीशेन महात्मना ॥ ४



आत्मानं दर्शयामास सूर्यकोटिसमप्रभम् ।

सरस्वत्युवाच—वरं वृणीष्व भद्रं ते यत्ते मनसि विद्यते ॥ ५
बृहस्पतिरुवाच—यदि मे वरदा देवि दिव्यज्ञानं प्रयच्छ नः ।
देव्युवाच—हन्त ते निर्मलज्ञानं कुमतिध्वंसकारणम् ॥ ६
स्तोत्रेणानेन यो भक्त्या मां स्तुवन्ति मनीषिणः ॥
बृहस्पतिरुवाच—लभन्ते परमं ज्ञानं यत्परैरपि दुर्लभम् ॥ ७
प्राप्नोति पुरुषो नित्यं महामाया प्रसादतः ॥
सरस्वत्युवाच—त्रिसन्ध्यं प्रयतो नित्यं पठेदष्टकमुत्तमम् ॥ ८
तस्य कण्ठे सदा वासं करिष्यामि न संशयः ॥



इति श्रीपद्मपुराणे सरस्वत्यष्टकस्तोत्रमहिमानुवर्णनम्

॥ सम्पूर्णम् ॥

सरस्वत्युवाच—वरं वृणीष्व भद्रं ते यत्ते मनसि विद्यते ॥ ५

बृहस्पतिरुवाच—यदि मे वरदा देवि दिव्यज्ञानं प्रयच्छ नः ।

देव्युवाच—हन्त ते निर्मलज्ञानं कुमतिध्वंसकारणम् ॥ ६

स्तोत्रेणानेन यो भक्त्या मां स्तुवन्ति मनीषिणः ॥

बृहस्पतिरुवाच—लभन्ते परमं ज्ञानं यत्परैरपि दुर्लभम् ॥ ७

प्राप्नोति पुरुषो नित्यं महामाया प्रसादतः ॥

सरस्वत्युवाच—त्रिसन्ध्यं प्रयतो नित्यं पठेदष्टकमुत्तमम् ॥ ८

तस्य कण्ठे सदा वासं करिष्यामि न संशयः ॥



इति श्रीपद्मपुराणे सरस्वत्यष्टकस्तोत्रमहिमानुवर्णनम्

॥ सम्पूर्णम् ॥